योगः कर्मसु कौशलम्

AHNIK VARTA PATRAM
Email - ahnikvartapatram@gmail.com

# आह्निक वार्ता पत्रम्

RNI No. : UPSAN/2018/76680

वर्ष-3 अंक 261 संस्कृत दैनिक/ प्रात; संस्करण | प्रयागराज 16 जुलाई 2021 शुक्रवार | पृष्ठ-4 | मूल्य- 2 रुपये

### सुभाषितम्

कीटोऽपि सुमनः संगादारो-
हति सतां शिरः । अश्मापि
याति देवत्वं महद्भिः
सुप्रतिष्ठितः॥

भावार्थ :
पुष्प के संग से कीडा भी अच्छे लोगों के मस्तक पर चढता है । बडे लोगों से प्रतिष्ठित किया गया पत्थर भी देव बनता है ।

### संक्षिप्तवार्ता:

#### एष्यायां भारतम् अतिक्रम्य कोविडस्य तापबिन्दुः भूत्वा इन्डोनेष्य

**नवदेहली।** इन्डोनेष्याराष्ट्रे कोविड् रोगिणां प्रतिदिनसंख्या वर्धते। इतःपर्यन्तं 40,000 उपरि एव प्रति दिनरोगिणां संख्या। नूतनतया दृढीकृतेषु बहुषु अतिव्यापनक्षमः डेल्टा विभेदः एव अधिकतया दृश्यते। इत्थं इन्डोनेष्या प्रतिदिनरोगिणां वर्धितसंख्यया भारतं अतिक्रम्य एष्याभूखण्डे कोविडस्य तापबिन्दुः (hot spot) अभवत्। गतसप्ताहादारभ्य भारते प्रतिदिन-कोविड्रोगिणां संख्या 40,000 अधः एव। द्वितीय तरङ्गः अतिरूक्षे अनुवर्तिते प्रतिदिनं चर्तुलक्षाधिकरोगिणः भारते आसन्। जून् मासस्य अन्तिमचरणे रोगिणां संख्या न्यूना अभवत्। इन्डोनेष्यायां रोगव्यापनमानं वर्धमाने सन्दर्भेऽस्मिन् राष्ट्रे सर्वत्र नियन्त्रणानि शक्तमकरोत्।

#### केरलेषु कोयिलाण्टिदेशे रेल्यानस्योपरि केरवृक्षः पतितः, गतागतं भागिकतया स्थगितम्।

**नवदेहली।** कोयिलाण्टिदेशसमीपं रेल्यानस्योपरि केरवृक्षः पतितः। सायंकाले पादोनषट्वादने एव घटना एषा संवृत्ता। कोयिलाण्टिदेशस्य तिक्कोटिदेशस्य च मध्ये एव अपघातः जातः। अनन्तपुर्याः मंगलापुरं प्रति गच्छन्तः नेत्रावती एक्स्प्रस् नाम रेल्यानस्योपरि एव . केरवृक्षः पतितः। जनानाम् अपायः न अभवत्। रेल्यानगतागतं भागिकतया स्थगितम्। यानयन्त्रस्य हानिः अभवत् इत्यतः कोषिक्कोट् नगरारात् नूतनं यन्त्रम् आनीय पुनः सन्निवेश्यानन्तरमेव यात्रां पुनरारब्धुं शक्यते इति रेल्-अधिकारिणा आवेदितम्। वैद्युतिबन्धं विच्छिद्य केरवृक्षं कर्तयितुं परिश्रमः अनुवर्तते।

उत्तर प्रदेशे इदानीं विधानस्य शासनम्, मुख्यमंत्री करोति कठिनम् परिश्रमम्

## वाराणस्यां प्रधानमंत्री मोदी योगी महोदयस्य श्लाघां कृतवान्




**वाराणसी/प्रयागराजः।** स्थानीयान् जनान् सम्बोधयन् प्रधानमंत्री नरेन्द्र मोदी महोदयः प्रदेशस्य मुख्यमंत्रिणः योगीनः आदित्यनाथस्य प्रभूतां प्रशंसां अकरोत्। प्रधानमंत्री अवदत् यत् अद्य उत्तर प्रदेशे विधि सम्मतं शासनं विराजते। योगीमहोदयः प्रचुरं परिश्रमं करोति। प्रधानमंत्री नरेन्द्रमोदी गुरूवासरे वाराणस्यां प्रवासं चकार। प्रधानमंत्री नरेन्द्रमोदी अस्मिन् अवसरे अनेकानां महत्वपूर्णानां योजनानां समारम्भंकृतवान्। तेनोक्तं यत् विकास कार्येसु दृष्टिपातं करोति योगी महाभागः। मोदी अब्रवीत् यत् 2017 ईसवीयतः पूर्वेऽपि धनावंटनम् कृत्वा प्रेषणम् भवतिस्म परंच तद्धनस्य अवरोधः लखनऊ इत्यस्मिन् राजधान्यामेव अभवत्। अद्य योगीसर्वत्र स्वयं गत्वा स्थितिम् अवलोक्य यथायोग्यं धनस्य सदुपयोगं करोति। योगिना विकास कार्याणि क्रियन्ते। अवसरेऽस्मिन् मोदी महोदयः अनेकानां परियोजनानां उद्घाटनम् शिलान्यासांचापि कृतवान्। सः वाराणस्यां पंच घण्टात्मके काले विभिन्नेसु आयोजनेसु प्रतिभागं कृतवन्त।

## भुवनेश्वर स्थित-आयुर्विज्ञान-संस्थान ( एम्स ) चिकित्सालये एक्मो Ecom यन्त्रं संस्थापितम्

<u>नन्दप्रदीप्तकुमारः/भुवनेश्वरम् ।</u>

अखिल-भारत-आयुर्विज्ञान-संस्थाने गुरुवासरे एक्मो यन्त्रांशः संस्थापित अभवत् । आगामिनि सप्ताहाभ्यन्तरे इदं यन्त्रं संचालितं भविष्यति इति एम्स पक्षतः सूचना प्रदत्ता । कोरोना महामारी-प्रपीडितानां रोगिणां कृते अयं यन्त्रांशः सहायको भविष्यति । राज्ये सर्वकारीय-चिकित्सालये अयं प्रथमः प्रयासः अस्ति । परवर्तिकाले श्रीरामचन्द्र-भञ्ज-चिकित्सा-महाविद्यालये अन्येषु चिकित्सालयेषु च इदं यन्त्रं समुपलब्धं भविष्यतीति राज्यसर्वकारेण उद्घोषितम् । का-ेबिडपीडितानां रोगिणां श्वास-प्रश्वासयोः सम्यक् व्यवस्थापनार्थम् अस्य यन्त्रस्य प्रमुखा भूमिका अस्ति । गुरुतर-आक्रान्तानां कोा-बिड रोगीणां चिकित्सा अनेन यन्त्रेण माध्यमेन सुचारुरूपेण भविष्यति । कियद्दिनानन्तरं कटकस्थित श्रीरामचन्द्र भञ्ज चिकित्सा महाविद्यालये 9 संख्यकानि इक्मो यन्त्राणि स्थापयिष्यन्तीति राज्य-स्वास्थ्य-मन्त्रिणा नवकिशोर-दासेन उक्तम् । यन्त्राणि परिचालयितुम् अभिज्ञ-चालकानामपि नियुक्तीकरणं जातम् ।



## उत्कलप्रदेशे ऐषमः बोलवम यात्रा स्थगिता

<u>नन्दप्रदीप्तकुमारः/ भुवनेश्वरम्।</u>

मरामारीकरोनायाः विभीषिकां लक्षीकृत्य ऐषमः बोलवम यात्रापि राज्यसर्वकारेण निषिद्धकर्तुं विचिन्तिता । सुतरां पवित्र-श्रावणमासे शिवभक्ताः देवाधिदेवस्य महादेवस्य जलाभिषेककर्तुं वञ्चिताः भविष्यन्ति । ओडिशा-राज्ये करोना संक्रमणस्य गम्भीरता अद्यापि बलवत्तरा अस्ति । दैनिक पञ्चाशदधिका जनाः म्रियन्ते । जन-साधारणानां सुरक्षायै सर्वाणि पर्व-पर्वाणि स्थगितानि । अद्यावधि मन्दिराणि अपि न उन्मुक्तानि । इत्यवसरे आगामिनि जुलाइ मासस्य 23 तारिकातः श्रावणमासस्य आरम्भो भविष्यति । 26 तारिकायां प्रथमः सोमवासरः पतति । सुतरामत्र काउडिआ- वर्गाणां जलभार-प्रस्तुति वेलायां प्रशासनस्य निषिद्धादेशः सर्वेषां शिवभक्तानां हृदये आघातो विहितः ।



## ओलम्पिक क्रीडातः पदकानि आनीयेरन्, स्वयन्निर्मेया उत्तर प्रदेशस्य क्रीडानीतिः– मुख्यमन्त्री योगी

### मुख्यमन्त्रिणः आह्वानं, क्रीडकाः एव सुनिश्चिनुयुः प्रदेशस्य क्रीडा विकास योजनायाः स्वरूपम्



**मेराजः मुख्यमन्त्रिणा उक्तः, ओलम्पिक क्रीडातः प्रति आगन्तव्यं, पुनः निर्मातव्यं विश्वस्तरीयः आक्षेपण क्षेत्रम्**

मुख्यमन्त्रिणा संवाद कार्यक्रमे लक्ष्य साधकः मेराज अहमद खानेन प्रदेशे शूटिंग रेंज इत्यस्य स्थापनायाः आवश्यकता उक्ता, यस्मिन् मुख्यमन्त्रिणा उक्तं यत् वाराणसी, लखनऊ चेत्यनयोः जनपदयोः शूटिंग रेंज इत्यस्य स्थापना भवति । सः ओलम्पिक क्रीडातः प्रत्यागच्छेत् तथा च परियोजनां दृष्ट्वा तां अन्ता राष्ट्रिय मानकानुरुपं सिद्धं कर्तुं सहायतां कुर्यात् । अनेन प्रकारेण, एथलीट क्रीडिका प्रियंका गोस्वामिना कृत्रिम क्षेत्रस्य विकासस्य आवश्यकता कथने मुख्यमन्त्रिणा शीघ्रमेव एषः आभावः दूरीकर्तुम् आश्वासनं दत्तम् । संवाद काले प्रियंका गोस्वामी (एथेलेटिक्स), अन्नूरानी (एथेलेटिक्स), सीमापुनिया (एथेलेटिक्स), वन्दना कटारिया (हॉकी), सौरभ चौधरी (शूटिंग), मे-राज़ अहमद खानः (शूटिंग), अरविन्द सिंहः (रोइंग), सतीश कुमारः (बॉक्सिंग), ललित कुमार उपाध्यायः (हॉकी), शिवपाल सिंहः (एथेलेटिक्स) अपि च तेषां परिजानानां उपस्थितिः अभवत्। इतः पूर्वं, क्रीडा युवा कल्याण राज्यमन्त्रिणा (स्वतन्त्र प्रभारः) उपेन्द्र तिवारिणा क्रीडकेभ्यः शुभकामनाः ददता तेषां सर्व विधावश्यकता पूर्णं कर्तुं विश्वस्तम्।

**लखनऊ।** मुख्यमन्त्रिणा योगिना आदित्यनाथेन प्रदेशे क्रीडासुविधानां विस्ता-राय क्रीडकैः एथलीटजनैः परामर्शं दातुम् आह्वानं कृतम् । मुख्यमन्त्रिणा उक्तं यत् उत्तरप्रदेशे एशियनक्रीडा, राष्ट्रमण्डलक्रीडा ओलम्पिकक्रीडा सदृश प्रतिस्पर्धानां सिद्धतायै क्रीडकेभ्यः याः अपि सुविधाः स्वीकरणीयाः, ताः दास्यन्ते । अस्मिन् पर्याय क्रीडकाः एव क्रीडाविभागेन सह मिलित्वा नीतिः सज्जीका-रिष्यन्ति। टोक्योदेशे ओलम्पिकक्रीडायां प्रतिभागं कुर्वद्भिः उत्तरप्रदेशस्य निवासिभिः सर्वैः क्रीडकैः/एथलीटजनैः बुधवासरे संवादं कुर्वता मुख्यमन्त्रिणा योगिना सर्वेभ्यः शुभकामनाः दत्ताः अपि च विश्वस्तं यत् अस्मिन् पर्याय टोक्योदेशतः उत्तमा वार्ता आगमिष्यति । शुभकामनायै मुख्यमन्त्रिणः आभारं व्यक्तीकुर्वता क्रीडकैः स्वकीयं सर्वश्रेष्ठप्रदर्शनं करणाय प्रतिबद्धता अभिव्यक्ता । आभासिमाध्यमेन जाते अस्मिन् संवादे मुख्यमन्त्रिणा योगिना एकैकशः सर्वाभ्यः दशभ्यः प्रतिभागिभ्यः कोरोना महामार्याः विपरीत परिस्थितिष्वपि सञ्चाल्यमानायाः ओलंपिकक्रीडायाः सज्जाविषये सूचना प्राप्ता। तेषाम् उत्साहश्च वर्धितः । तत्र प्रदेशसर्वकारं प्रति अपेक्षाविषये क्रीडकेषु पृष्टेषु सत्सु तैः ओलंपिकसदृशवैश्विक स्पर्धानां सज्जायै उत्तमप्रबन्धस्य आवश्यकता उपस्थापिता। मुख्यमन्त्रिणा अपि सर्वे आश्वस्तीकृत्य उक्ताः यत् प्रधानमन्त्रिणः नरेन्द्र मोदिनः मार्गदर्शने केन्द्रराज्यसर्वकारयोः क्रीडां क्रीडकांश्च प्रोत्साहयितुं निरन्तरं प्रयतेते। ग्रामेषु क्रीडाम् उद्देश्य वातावरणं निर्मीयेत। तदर्थं प्रदेशस्य सर्वेषु ग्रामेषु क्रीडाक्षेत्रं, व्यायामशाला च निर्मास्यते। युवमंगलदलगठनं भवति तु युवप्रतिभायै अपि सहयोगसामग्री उपलप्स्य-ते। मेरठे क्रीडाविश्वविद्यालयः स्थाप्यते। एषः विश्वविद्यालयः प्रदेशे क्रीडाक्रीडकयोः विकासाय एकं वृहत्केन्द्ररूपेण प्रस्फुटितं भविष्यति। मुख्यमन्त्रिणा उक्तं यत् सर्वे प्रतिभागिनः ओलम्पिकक्रीडातः पदकं प्राप्य आगच्छेयुः, पुनः प्रदेशे वैश्विकमानकेषु क्रीडासुविधायाः विकासाय स्वकीयां कायञ्योजनां वदेयुः । अनेन परामर्शाधारेण सर्वकारद्वारा सर्वे अपेक्षिताः प्रबन्धाः करिष्यन्ते । संवादकाले उपस्थितेभ्यः क्रीडकेभ्यः वर्धापनानि ददता मुख्यमन्त्रिणा उक्तं यत् बहुशीघ्रं सर्वेषां क्रीडकानां परिजनेभ्यः लखनऊजनपदे आमन्त्र्य सम्मानं प्रदास्यते । मुख्यमन्त्रिणा उक्तं यत् राज्यसर्वकारेण ओलम्पकक्रीडाकाले एकलप्रतिस्पर्धानां स्वर्णपदकविजेतृभ्यः षष्टिकोटिः, रजतपदकविजेतृभ्यः चतुःकोटिः, कांस्यपदकविजेतृभ्यः द्विकोटिः रुप्यकाणां सम्मानराशिः प्रदास्यते । अनेन प्रकारेण समूहक्रीडासु स्वर्णपदके त्रिकोटिः, रजतपदके द्विकोटिः, कांस्यपदकाय एककोटिः रुप्यकाणां धनराश्या सम्मानयिष्यन्ते । अपि च ओलम्पिकक्रीडायां प्रतिभागं कुर्वद्भ्यः उत्तरप्रदेशनिवासिभ्यः सर्वेभ्यः क्रीडकेभ्यः दश–दशलक्षं रचप्यकाणि अपि प्रदास्यन्ते ।

## श्रीराम नाम्नि व्योमनिलयः, आध्यात्मिकवनं, क्रूस् सेवा, इत्यादिभिः सह अयोध्या विकास योजना



**नवदेहली।** विश्वस्य प्रथमवेदनगरी इति स्वप्नेन सह अयोध्याविकासयोजना प्रधानमन्त्रिणः नरेन्द्रमोदिनः समक्षं समर्पिता। विश्वोत्तरविमान- निलयं, रेल्याननिस्थानकं, श्रीरामस्य वनवासकालचित्रितं रामायण-आध्यात्मिकवनम् इत्यादिभिः सम्पन्ना अतिविशाला भवति एषा योजना। विमान-पत्तनं मर्यादापुरुषोत्तम श्रीरामविमाननिलयं इति नाम्ना भविष्यति। अयोध्यां प्रति यानमार्गाः चतुश्रेणीरूपेण षट्श्रेणीरूपेण च राष्ट्रिय- राजमार्गत्वेन परिवर्तयिष्यति। अयोध्यानगरं परितः पञ्चषष्ठिकिलोमीट्र दैध्यञ्युक्तस्य अयोध्यावलययानमार्गस्य (Ayodhya Ring road) निर्माणदायित्वं भारत-राष्ट्रिय -राजमार्ग-प्राधिकरणेषु (national highway authority of India) निक्षिप्तं भवति। अतिश्रद्धेयं तथा अतिविशिष्टम् इति मात्रं वक्तुं शक्यते सरयूतीरस्थं रामायण आध्यात्मिकवनम्। रामस्मृतिवनम् इति योजनाया नाम दत्तम्। अत्र रामस्य सीतायाः लक्ष्मणस्य च चतुर्दशसंवत्सरवनवासस्य सचित्राविष्कारः प्रदर्शशशदष्यति। 1200 एक्क विस्तृता वेद नगरी योजना च अस्मिन् अन्तर्भविष्यति। तत्र आश्रमाः पञ्चनक्षत्र भोजनालयाः च अन्तर्भविष्यन्ति। एवं भारतीयेतिहास विशेषं रामायणं वनरूपेण नूतन परम्परायाः समक्षं साक्षात्कार मेष्यति ।

मुख्यमन्त्रिणः 'मिशन-रोजगार', 'मिशन-शक्तिः' चाभियानं प्राप्तं ग्रामं–ग्रामं, गृहं–गृहं प्रति

# ग्रामे–ग्रामे प्राप्ता वृत्तिः, विद्युत्सख्यः कुर्वन्ति कार्याणि



**3,39,275सङ्ख्यकाभिः स्वयंसहायतासमूहस्य सक्रियाः 2859सङ्ख्यकाः महिलाभिः 2,04,028सङ्ख्यकानां प्राप्यकानां सापेक्षं 25.68कोटिमितानां रुप्यकाणां प्राप्तिः कृता, महिलाभ्यः अष्टपञ्चाशतलक्षमितानां रुप्यकाणां अभवत् अर्थप्राप्तिः**

**लखनऊ।** मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य 'मिशन-रोजगार', 'मिशन-शक्तिः' चाभियाने महिलानां सशक्तिकरणाय आरब्धम्। तत्र मिशन-शक्तिः अभियानम् अधुना ग्रामं–ग्रामं, गृहं–गृहं प्रति प्राप्तम् । अनयोः अभियानयोः अन्तर्गतं प्रदेशे प्रप्रथमं स्वयंसहायतासमूहानां महिलाः विद्युतसखीरूपेण मीटर-वाचनं स्वीकुर्वन्ति अपि च अवशिष्टं विद्युत्प्राप्यकस्य शोधस्य सञ्चयं कुर्वन्ति । अनेन स्वयंसहायतासमूहानां महिलाभ्यः प्रायेण आढतरूपेण अष्टपञ्चाशल्लक्षरूप्यकाणाम् अर्थप्राप्तिः अभवत् ।

मुख्यमन्त्रिणः योगिनः आदित्यनाथस्य प्रक्रमे प्रदेशे स्वयंसहायतासमूहानां महिलाः नवाचारैः योज्यन्ते। प्रदेशस्य सर्वेषु जनपदेषु स्वयंसहायतासमूहमाध्यमेन उपभोक्त?णां विद्युत्प्राप्यकस्य शोधस्य व्यवस्था प्रशासिता। अनेन ग्रामीणक्षेत्रेषु महिलाभ्यः वृत्तिः अपि उपलभ्यते अपि च जनेभ्यः विद्युत्प्राप्यकस्य शोधे अपि सुविधा प्राप्यते। समूहस्य महिलानां पक्षतः शोधितेषु विद्युद्व्यापकेषु अधिकांशतः विद्युद्व्यापकानि एतादृशानि सन्ति, यानि द्वित्रिवर्षेभ्यः न शोधितानि सन्ति अथवा यदारभ्यः तेषां संयोजनम् आसीत्, तेभ्यः कदापि विद्युद्व्यापकम् एव शोधितम्, अपितु समूहस्य महिलानां प्रयासे तादृशजनैः अपि विद्युद्व्यापकस्य शोधं कृतम् । विद्युद्विभागे समूहानां षष्ट्यशीतिशतानां महिलानां पञ्जीकरणम् अभवत् । एतेषु 2859 सङ्ख्याभिः महिलाभिः 2,04,028सङ्ख्यकानां प्राप्यकानां सापेक्षं 25.68कोटिमितानां रुप्यकाणां प्राप्तिः कृता । प्रत्येकस्मिन् विद्युद्व्यापके समूहसदस्येभ्यः विंशतिरुप्यकाणि तथा च द्विसहस्राधिकस्य विद्युद्व्यापके एकप्रतिशतम् आढतरूपेण दीयते ।

## शीघ्रमेव इतोऽपि महिलाः अभियानेन सह योजयिष्यन्ते गोस्वामी

उत्तरप्रदेश राज्यग्रामीणा जीविकाभियानस्य प्रबन्धनिदेशकेन भानुचन्द्रगोस्वामिना उक्तं यत् आजीविकाभियानान्तर्गतं प्रत्येकसहस्रग्रामीणोपभोक्तृषु स्वयंसहायतासमूहानां महिलाः योजनीयाः, यस्य निमित्तं अभियानस्तरे कार्यं क्रियते अपि च विद्युद्विभागपक्षतः समूहानां महिलाः प्रशिक्ष्यन्ते।अधुना पर्यन्तं 3,39,275 सङ्ख्यकाभिः स्वयंसहायतासमूहानां 2859सङ्ख्यकाभिः महिलाभिः सक्रियतया कार्यं क्रियते । अवशिष्टाभिः महिलाभिः शीघ्रमेव उपकरणप्राप्तिः प्रशिक्षणानन्तरं च विद्युद्व्यापकस्य शोधकार्यम् आरप्स्यते ।



## स्वयंसहायतासमूहानां महिलाः स्वीकुर्वन्ति मीटर-वाचनं, कारयन्ति विद्युत्प्राप्यकस्य शोधम्



### पश्चिमोत्तर प्रदेशे

### सर्वतोऽधिकाः 898 सङ्ख्यकाः विद्युत्सख्यः कुर्वन्ति कार्याणि

विद्युद्विभागेन प्रदेशाय चतुर्षु क्षेत्रेषु विभाजितम् । अस्मिन् सर्वतोऽधिकं स्वयं सहायता समूहानां 898सङ्ख्यकाः महिलाः पश्चिमञ्चल विद्युत वितरण निगम लिमिटेड इत्यस्मिन् विद्युत सखीरूपेण कार्यं कुर्वन्ति । एतत् अनन्तरं पूर्वाञ्चल विद्युत वितरण निगम लिमिटेड इत्यस्मिन् 812सङ्ख्यकाः, दक्षिणाञ्चल विद्युत वितरण निगम लिमिटेड इत्यस्मिन् 692सङ्ख्यकाः अपि च मध्याञ्चल विद्युत वितरण निगम लिमिटेड इत्यस्मिन् 457सङ्ख्यकाः स्वयं सहायता समूहानां महिलाः सन्ति।

## तालध्वजरथः



दशांगुलोत्तरश्रेष्ठो द्वात्रिंशद् हस्तमानतः ।
चतुर्दशानि चक्राणि नीललोहितसुन्दरः ?
उच्चोऽयं परमो मान्यस्तालध्वजातिशोभनः ।
नन्द-सुनन्दनामानौ द्वारपालौ प्रकीर्तितौ ?
त्रिषट्युत्तरसंख्येश्च काष्ठसप्तशतैरपि ।
निर्मितोऽयं रथो घोरो मयाख्य-दानवेन च ?
हलं च मुसलं शस्त्रे रज्जुर्वासुकिरेव च ।
उन्मनीनामध्वजोऽस्ति नवास्य पार्श्वदेवताः ।
मेरुकैलासनामाख्यः पीठः परमपावनः ?
रामं राजीवनेत्रं शिरसि फणिधरं श्वेतवर्णावभासं
योगीनामग्रगण्यं मणिमयमुकुटं कुण्डलं क्रान्तगण्डम्।
श्रीक्षेत्रप्लावयन्तं कनकमयवपुः धारयन्तं वरेण्यं
वन्दे तालध्वजस्थं हलमुसलधरं रेवतीप्राणबन्धुम् ?
शश्वत् शशांकधवलं निजकान्तिकान्तं
तालध्वजेऽतिरमणीयसहर्षरूपम् ।
श्रीगुण्डिचाऽमरपतिं मुनिमग्रगण्यं
वन्दे कलंकरहितं बलभद्रचन्द्रम् ?
शिरसि भुजगचिह्नं चाग्रगम्यो महात्मा
कलुषरहितदेहो देवदेवो महेशः ।
सुमधुरमधुपायी दिव्यतालध्वजस्थो
धवलितमयदीप्तिः कामपालः प्रपायात् ?

**नन्दप्रदीप्तकुमारः**

## सम्पादकीयम्

### औचित्यानौचित्य विचारेण बिना विरोधकरणम् विपक्षैः

वर्तमाने राजनीतिके समाजे प्रतिपक्षस्य राजनेतारः केवलं विरोधे एव वक्तव्यंददाति। तेषां विरोधस्य लक्ष्यम् सत्तायाः विरोधः, प्रतिरूद्धे विराजमानाः नेतारः सपा अध्यक्षः अखिलेश यादवः बसपा अधिष्ठात्री मायावती, कांग्रेसस्य अध्यक्षः राहुलः गांधी एते सर्वे एकीभूय विरोध प्रदर्शनम् एव कर्तुं इच्छन्ति। यतः अमुक कार्यं भाजपा दलेन सुनिश्चितम्। अत एव विरोधः करणीयम्। प्रतिरोधनस्य टीका मोदी महोदयेन, योगी महोदयेन वा समागतः, अत एव अखिलेशः भाजपा प्रतिरोधनं उक्त्वा विरोधम् चकार। इत्थं रूपेण कांग्रेसस्य राहुलगांधी अपि यथा यथा काले अनेकेसु प्रकरणेसु विरोधं कृत्वा लोकापवादं कृतवान्। सम्प्रति लखनऊ नगरे विशेष सुरक्षा बलेन द्वौ आतंकवादिनौ बन्दी कृतवान्। अस्मिन् प्रकरणे सपा अध्यक्षः अखिलेश यादवः विरोधं कुर्वन् उक्तवान् यत् माम् उत्तर प्रदेशस्य सर्वकारोपरि उत्तर प्रदेशस्य आरक्षी दलोपरि वा किंचित् मात्रं विश्वासोनास्ति। हास्यास्पदमिदं यत् आतंकवादस्तु राष्ट्रीय सुरक्षायाः विषयः अस्मिन् प्रकरणे राजनीतेः कथमपिसावकाशः नास्ति। एतद् सन्दर्भे राजनीतिः न कर्त्तव्या। प्रतिपक्षान् औचित्यं अनौचित्यं विचार्य एव कश्मिंचदपि विषये स्व विचारान् प्रकटनीयम्। अस्तुराष्ट्रस्य स्थितिं अवलोक्य सर्वान् यथोचितं कार्यंकरणीयम्।

## नीतिसुधामृतम्

संसारे जीवने च विरसताया अनुभवकरणम्, विषयैः सह चेतस आसक्तेः परित्याग एव वैराग्यमस्ति। लौकिकेषु पारलौकिकेषु च भोगेषु विरसताया अनुभवकरणमेव वैराग्यमुच्यते। केनापि वस्तुना सह घृणया द्वेषेण वाऽप्रीतिकरभावोत्पत्तिरेव न भवति वैराग्यम्। विषयेन्द्रिययोः संयोगेन रागस्योत्तपत्तिर्भवति। अत एव विषयाणां नश्वरत्वविचारस्य चेतसि दृढीकरणम्, विषयेषु च चेतसः समासक्तेर्वारणमेव यथार्थतया वैराग्यमस्ति।

विवेकचूडामणौ यथोक्तम्-

**'तद्वैराग्यं जुगुप्सा या दर्शनश्रवणादिभिः।
देहादिब्रह्मपर्यन्ते ह्यनित्ये भोगवस्तूनि।।'**

## पेट्रोल-डिजेल अहैतुक-मूल्यवृद्धि वामपन्थि-दल पक्षतः यानवाहन- चलाचले व्याघातो जातः



**नन्दप्रदीप्तकुमारः/चान्दबालि ।** अग्नितैलादीनां पेट्रोल-डिजेल रन्धनग्यास-समेत अन्य-अत्यावश्यक-द्रव्यादीनां अहैतुक-मूल्यवृद्धि-प्रतिवादेन वामपन्थि-दल पक्षतः अद्य षट् होरां यावत् ओडिशा प्रदेश उज्झितः आसीत् । फलतः यानवाहन-चलाचले व्याघातो जातः । इदमान्दोलनं चान्दवालि स्थाने सफलतया समाप्तम् । अस्मिन् समये चान्दबालि आपणः, व्लुक कार्यालयः ,राजस्व कार्यालयः, कोषागारः, जीवनवीमा कार्यालयः, विज्ञापिताञ्चल-कार्यालयाश्च अवरुद्धा आसन् । अस्मिन् आन्दोलने सि पि आइ एम भद्रक जिल्ला कमिटि सभ्यः विकाश नाथः,चान्दबालि आञ्चलिक कमिटि संपादकः मलय भोइ, वरिष्ठ नेता रवि पट्टनायक, ब्रह्मानन्द परिडा,फकीर विश्वाल,व्लुक सभापतिः तथा कांग्रेस नेता किणुराम जेना प्रमुखाः सदस्याः भागं गृहीतवन्तः ।

## सर्वे सर्वपदादेशा दाक्षिपुत्रस्य पाणिनेः एकदेशविकारे हि नित्यत्वं नोपपद्यते

अथेदानीं स्थानिवद्विधायकानि सूत्राणि उपस्थाप्यन्ते। आदावेवात्रावधेयं यत् 'स्थानिवदादेशेऽनल्विधौ।' इति स्थानिवद्विधायकं मूलं सूत्रम्। आदेशः स्थानिवत् स्यात् न तु स्थान्यलाश्रयविधौ इति दीक्षितवृत्तिः। तेनानल्विधौ स्थानिवद्भावः स्यात्। यथा 'अस्तेर्भूः'14 इत्यनेन अस्धातोः स्थाने भ्वादेशः भवति। अत्र स्थानिनः अनेकालत्वात् तत्स्थाने आदेशस्य स्थानिवत्त्वं स्यात्। अतो बभूव इत्यत्र अस्धातोः स्थाने 'अस्तेर्भूः' इत्यनेन भ्वादेशो स्थानिवत्त्वात् द्वित्वे अभ्यासादिकार्ये चर्त्वे तद्रूपं सिद्धम्। स्थानिवद्भावविषये द्वितीयं सूत्रं हि 'अचः परस्मिन् पूर्वविधौ'15 इति। पूर्वं अनल्विधौ स्थानिवद्भाव उक्तः। परमनल्विधौ यथा स्थानिवत् स्यात्तदर्थं सूत्रमिदमारभ्यते। पूर्वसूत्रादिह स्थानिवदादेश इत्यनुवर्तते। अच इति आदेशेन अन्वेति। तेन अच आदेश इति। परस्मिन्निति निमित्तसप्तमी। तेन परनिमित्तक इति लभ्यते। अच आदेशविशेषणम्। पूर्वविधाविति विषयसप्तमी। तेन अजादेशः परनिमित्तकः पूर्वविधौ कर्तव्ये स्थानिवद्भावो भवतीति। तथाहि पटयतीत्युदाहरणम्। पटुमाचष्टे इति विग्रहे 'तत्करोति तदाचष्टे'16 इति णिचि अनुबन्धलोपे 'नौ इष्टवत्प्रातिपदिकस्य'17 इति इष्टवद्भावे (टिलोपे) 'पट् इ' इत्यावस्थायां तस्य स्थानिवद्भावाद् 'अत उपधायाः' वृद्ध्यभावात् 'पुगन्तलघूपधस्य च'18 इति धातुत्वे लटि तिपि शबागमे अनुबन्धलोपे अयादेशे पटयतीतिरूपं सिद्ध्यति। अत्र णिच्प्रत्ययः परनिमित्तकः। अतस्तमाश्रित्य स्थानिवत्त्वात् पूर्वविधकार्यं नाम उपधावृद्धिकार्यं न स्यादत्र। अथेदानीं स्थानिवद्भावस्य निषेधसूत्राणि उपस्थाप्यन्ते। प्रथमस्तत्र 'द्विर्वचनेऽचि' इति। रूपातिदेशसूत्रमिदम्। द्विरुच्यते येन परनिमित्तेन तद् द्विवचनं द्विवचननिमित्तमिति यावत्। अचीति विशेषणम्। 'अचः परस्मिन् पूर्वविधौ'19 इत्यत्र अच इति, 'स्थानिवदादेशेऽनल्विधौ'20 इत्यत आदेशः इति 'न पदान्त....'21 इत्यतो नेति चानुवर्तते। एवं द्वित्वे कर्तव्ये सति इत्यपि लभ्यते। तेन द्वित्वनिमित्वे अचि परे अच् आदेशो न स्थानिवत् स्यात् द्वित्वे कर्तव्ये इति वृत्तिः। यद्यपि काशिकावृत्तौ अजादेशः स्थानिवत्स्यादिति रूपादिदेशपक्षः स्वीकृतः तथाप्यादेशनिषेधपक्षेऽपि भाष्यारूढ इति स एव सिद्धान्तकौमुद्यां अनुगृहीतः। फलं चोभयात्र तुल्यम्। किञ्च आदेशम् अङ्गीकृत्य पुनः स्थानिरूपाश्रयणापेक्षया निषेधपरतया व्याख्यानमेव लघु 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति न्यायात्।

## रम्या रामायणी कथा

मर्यादा पुरुषोत्तम श्री राम की जीवन गाथा

॥श्री राम कथा॥

**कूजन्तं रामरामेति मधुरं मधुराक्षरम्।
आरुह्य कविताशाखां वन्दे वाल्मीकिकोकिलम्?
रामाय रामभद्राय रामचन्द्राय वेधसे।
रघुनाथाय नाथाय सीतायाः पतये नमः ॥**

श्रीरामस्य अयनमिति रामायणम्। श्रीमद्रामायणमादिकाव्यं सर्वेषां संस्कृतभाषाकाव्यानां जीवातुभूतं च भवति। धर्मनीतिदृष्ट्या काव्यात्मकदृष्ट्या लोकोपकारकदृष्ट्या च श्रीरामकथाया महत्त्वं लोके अद्यापि परिव्याप्तं वर्तते। पितृपुत्रधर्मस्य पतिपत्नीधर्मस्य भ्रातृधर्मस्य तथान्यकौटुम्बिकधर्मस्य चादर्शभूतो इयं कथा वर्तते। पूज्यपादः गोस्वामी तुलसीदासमहाभागः श्रीमद्वाल्मीकिरामयणं मूख्याधारमवधार्य श्रीहनुमत्कृपया श्रीरामकथां लिखितवान्। कथयते यत् श्रीवाल्मीकिः पूर्वं कश्चित्तस्कर आसीत्, तन्नाम रत्नाकर आसीत्। सप्तर्षीणां दर्शनानन्तरं राममन्त्रजपपूर्वकतपसा रत्नाकरो महर्षिवाल्मीकिः संजातः। प्रकृतिसौन्दर्यस्य धर्मस्य च यत्र तत्र वर्णनं दृश्यते । सरलसंस्कृतभाषापठनार्थमत्यन्तोपयोगि साधनं च वर्तते। अत एव संस्कृतज्ञानवर्धनाय श्रीवाल्मीकिरामायणमवश्यमेव पठितव्यं पाठितव्यं चेति निवेदये। श्रीमद्वाल्मीकिरामायणग्रंथे 24000 श्लोकाः सन्ति। रामायणस्य प्रतिसहस्रतमस्य श्लोकस्य आदौ गायत्रीमन्त्रस्य एकैकमक्षरं प्राप्यते। पाठभेदादयो न भवेयुरिति समुद्देशेनैवं कृतं स्यान्महर्षिणा। रामायणं सर्वासु भारतीयभाषासु बह्वीषु विदेशीयभाषासु चानूदितमुपलभ्यते। एतस्मात् रामायणस्य जनप्रियता सुस्पष्टा भवति। श्रीरामचरितमानसस्य शैली ललिता सरला सुन्दरी च। श्रीरामस्य धर्मनिष्ठा, श्रीसीतायाः सौशील्यं, श्रीभरतस्य भ्रातृवात्सल्यं, लक्ष्मणस्य कर्तव्यनिष्ठा, श्रीहनुमत्कार्यदक्षता, वानरराजसुग्रीवस्य सौहार्दभाव इत्यादयः अंशाः समदारणीया अनुकरणीयाः सन्तीति प्रार्थये।

आचार्य अरविंद पांडेय

प्रेरणाश्रोत

जगदगुरू शंकराचार्य ज्योतिष्पीठ काशी पीठाधीश्वर ब्र.ली. स्वामी विद्यानंद सरस्वती जी महराज (मौनी जी), शाश्वतानन्द सरस्वती जी महाराज।

संरक्षक मण्डल

योग गुरू स्वामी आनन्द गिरि जी
(बांध स्थित बड़े हनुमान जी )

डॉ भगवत् शरण शुक्ल
प्रोफेसर-व्याकरण विभाग-संस्कृतविद्या धर्मविज्ञान संकाय
काशी हिन्दू विश्वविद्यालय वाराणसी

प्रमोद बंसल
निदेशक-महारानी चाय, प्रयागराज

सलाहकार

श्रीमती अनामिका चौधरी
(सदस्य राज्य महिला आयोग)
डा. पुष्पा पाल (एमजीएम हास्पिटल)
- सुनील सराफ
(अवतार केमिस्ट)
-पं. देवेन्द्र प्रसाद त्रिपाठी
-एसो. प्रो. डॉ. मुरली मनोहर द्विवेदी
-डॉ. शम्भुनाथ त्रिपाठी (अंशुल)
-डा. मोरार जी त्रिपाठी
-आचार्य कुशलदेव
( प्रवक्ता गुरुकुल महाविद्यालय ततारपुर हापुड़।)
-महेश जी कपूर
डा. कृष्णानन्द पाण्डेय
फादर - थॉमस कुमार
उपसम्पादक - विनम्र शुक्ल
विशेषवार्ताहरः
डॉ प्रदीप्त कुमार नंदः

प्रयागराज ( इलाहाबाद )

RNI No. : UPSAN/2018/76680

स्वामी मुद्रकः प्रकाशकश्च आनन्द नारायण शुक्ल द्वारा रमा प्रिन्टिग प्रेस, 53/25/1,ए बेली रोड, नया कटरा, प्रयागराज से मुद्रित एवं 1286बी/541बी नेहरू नगर मीरापुर, प्रयागराज से प्रकाशित।

मो.-9415633297

संपादक-राकेश शर्मा